य॰ प्रत्यगभिन्नब्रह्मरूपं मा मनुष्यं मत्वा स्वात्मप्रशंसनमेवं करोतीत्यभ्यसूयति तस्मा अपि न त्वया वाच्यमिदं गीताशास्त्रम्। हिताय तपस्विने गुरुदेवभक्ताय शुश्रूषवे भगवत्यनसूयवे वाच्यमित्यर्थाल्लभ्यते। एवमेव सर्ववेदान्तशास्त्रसंप्रदायविधिरित्यर्थः ॥ ६७ ॥

यथोक्ताधिकारिणे गीताशास्त्रोपदेष्टुः फलमाचष्टे--

**य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति।**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८ ॥**

य इति। यो मद्भक्तः निःश्रेयसार्थत्वात् परममिमं ग्रन्थं गोप्यतमत्वात् गुह्यं मद्भक्तेष्वभिधास्यति वक्ष्यति ग्रन्थतो ऽर्थतश्च वदतीत्यर्थः। भगवतः परमेश्वरस्य शुश्रूषा मया क्रियत इति मयि परां भक्तिं कृत्वा स मद्भक्तः तत्फलभूतं मामेवैष्यति मुच्यते संसारबन्धनात्। अस्मिन्नर्थे संशयो न कर्तव्य इत्यर्थः ॥ ६८ ॥

एवं संप्रदायकर्तुस्तुल्यो ऽन्यः प्रियो मे नास्तीत्याह--

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

न चेति। प्राणिमात्रेषु देवतिर्यङ्मनुष्येषु सर्ववेदान्तसिद्धान्तगीताशास्त्रसंप्रदायकृतः तस्मान्महानुभावान्मे मम परमेश्वरस्य कश्चिदप्यन्यः प्रियकृत्तमो न चास्ति लोके अस्मिन् भुवि तस्मादन्यः प्रियतरो न च भविता न भविष्यतीत्यर्थः ॥ ६९ ॥

पाठयितु फलमाह—

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**

अध्येष्यत इति । य पुमानावयो, कृष्णार्जुनयोरिम धर्मादनपेत धर्म्यं सवादमध्येष्यते जपरूपेण पठिष्यति तेन पुसा उच्चैरुपाशु मानसाना यज्ञाना ज्ञानयज्ञस्य मानसत्वात वैशिष्ट्यमिति गीताशास्त्राध्ययनरूप ज्ञानयज्ञेनाहमिष्ट प्रसादित स्यामिति मे मम परमेश्वरस्य मति ॥ ७० ॥

अन्यस्य पठत श्रोतु श्रवणफलमाह—

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।**
**सो ऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥७१॥**

श्रद्धावानिति । श्रद्धावान् यो नर स्वस्य पठनशक्त्यभावे ऽपि परस्य पठत शृणुयात् श्रोता श्रद्धावानपि किमुच्चै पठति किमबद्धमिति दोषदृष्टिं न कुर्यात् तद्व्यावृत्त्यर्थमनसूयु॰ असूयारहित॰ सन् शृणुयात सो ऽपि सर्वपापै मुक्त सन् अश्वमेधादिपुण्यकर्मणा शुभान् लोकान् प्राप्नुयात् ॥ ७१ ॥

त्वयैकाग्रचित्तेन मदुपदिष्टार्थ किं यथावद्गृहीत येन स्वाज्ञान जमोहनिवृत्ति स्यात्, यदि ते मदुपदेशत स्वप्रबोधो नोदित तदा पुन रुपदेश करोमीत्याशयेन श्रीभगवानुवाच—

श्रीभगवानुवाच—

**कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।**
**कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ७२ ॥**

कच्चिदिति । हे पार्थ! त्वयैकाग्रेण चेतसा मयोक्तं श्रुतं कच्चिच्छ्रवणेनावधारितं किम्, किं वा प्रमादतो नावधारितम् । तव शास्त्रश्रवणायासो ममोपदेष्टृत्वायासश्च यदर्थो ऽयं प्रवृत्तः सो ऽयमज्ञानसंमोहः प्रनष्टः कच्चित् हे धनंजय! अविवेकस्वभावो नाशं गतः किमिति प्रश्नार्थः ॥ ७२ ॥

भगवदुपदेशतः स्वात्मनः कृतार्थतां ख्यापयन्नर्जुन उवाच—

अर्जुन उवाच—

**नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मया ऽच्युत ।**
**स्थितो ऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥**

नष्ट इति । हे अच्युत! त्वदुपदेशजनितप्रबोधमार्तण्डेन स्वाज्ञानमोहध्वान्तो नष्टः कवलितः । त्वत्प्रसादान्मया ब्रह्मैवाहमहमेव ब्रह्मेति प्रत्यगभिन्नब्रह्मस्मृतिर्लब्धा यया स्मृत्या सर्वग्रन्थीनां विप्रमोक्षो भवति । स्वाज्ञानमोहनिवृत्तितो ब्रह्मात्मस्मृतिलाभश्चेत्येतावत्खलु सर्ववेदान्तसिद्धान्तज्ञानफलं यतो नातो ऽतिरिक्तमस्ति अतो ऽहं गतसंदेहः संस्त्वच्छासने स्थितो ऽस्मि । चित्तशुद्ध्यर्थं स्वधर्मानुष्ठानं कुर्विति यत्त्वयोक्तं तव तद्वचः करिष्ये । न मे कर्तृत्वमस्ति, त्वदुपदेशतो मम कृतार्थत्वादित्यर्थः । एवं कृष्णार्जुनसंवादं धृतराष्ट्रं प्रत्युक्त्वा ऽथ कथासंबन्धप्रदर्शनार्थं संजय उवाच—

संजय उवाच—

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

इतीति । इत्येवमुक्तप्रकारेणाहमत्यन्तविस्मयहेतुत्वादद्भुतं रोमाञ्चकरत्वात् रोमहर्षणं महाऽऽत्मनो वासुदेवस्य पार्थस्य च संवादमिममश्रौषं श्रुतवानस्मीत्यर्थ ॥ ७४ ॥

कस्मादेव श्रुतवानसीत्यपेक्षायामाह—

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यतमं परम् ।**
**योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ७५ ॥**

व्यासेति । व्यासेन भगवता यतो मह्यं दिव्य चक्षु श्रोत्रं दत्तम्, अतो ऽहमेतद्गुह्यतम सर्ववेदान्तसारसंग्रहभूत गीताशास्त्रं श्रुतवानस्मि । किं तदिति तत्राह—परमिति । स्वाविद्याद्वयतत्कार्यात्पर प्रत्यक्परचितो योग मैक्यज्ञान श्रुतवानित्यर्थ । कस्मादिति तत्राह—कृष्णादिति साक्षात्स्वयमेव कथयत उपायोपेयभूतनिष्ठाद्वयात्मक गीताशास्त्र योगेश्वरात् कृष्णात् ब्रह्मादिस्तम्बान्तदेशिकादित्यर्थ ॥ ७५ ॥

एतदेव स्मृत्वा सदा हृष्यामीत्याह—

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

राजन्निति । हे राजन् धृतराष्ट्र! सकृच्छ्रवणमात्रत सर्वपापहरत्वात् पुण्य केशवार्जुनयो अद्भुतमिम सवाद संस्मृत्य सस्मृत्य मुहुर्मुहु हृष्यामि ॥

भगवद्रूपस्मरणतो ऽपि हृष्यामीत्याह—

**तच संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ७७ ॥**

तच्चेति । हे राजन्! हरेरत्यद्भुत तच्च विश्वरूप सम्मृत्य सस्मृत्य मे महान् विस्मय प्रादुर्भूत । तेनैवाह पुन पुन हृष्यामि ॥ ७७ ॥

एवभूते भगवति प्रसन्ने सति पाण्डवाना पराजयशङ्का कुत इत्याह—

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥ इति ।**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन सवादे सन्यासयोगो नामाष्टादशो ऽध्याय ॥

यत्रेति । यत्र यस्मिन् पाण्डवपक्ष योगाना योगिना चेश्वर श्रीकृष्णो भगवान् वर्तत, यत्र च पार्थो गाण्डीवधनुर्धरो जागर्ति तत्रैव ध्रुवा राज्यश्री ध्रुवो विजय ध्रुवा विभूति ध्रुवा नीति न्यायो ऽपीति मे मति निश्चय । इतिशब्द शास्त्रपरिसमाप्त्यर्थ ॥ ७८ ॥

येन वेदान्तसिद्धान्तसार सम्यक्प्रकाशित ।
यान्ति यज्ज्ञानतो मुक्ति तस्मिञ्शाम्यतु मे मन ॥
येन पार्थाय गीताऽन्त्यषट्कतत्त्वमर्थयो ।
लक्ष्यैक्य भणित मे ऽद्य कैवल्य स प्रयच्छतु ॥

इति श्रीमत्परमहसपरिव्राजकाचार्यश्रीवासुदेवेन्द्रशिष्यश्रीरामचन्द्रेन्द्र कृतौ श्रीमद्भगवद्गीताऽर्थप्रकाशिकायामष्टादशो ऽध्याय ॥

नैष्कर्म्योपनिषद्ब्रह्मज्ञानाम्भिना यन्महद्विका ।
गीताऽर्थबोधिनी सेह त्रिपाठारायणार्पिता ॥

ओं श्रीमद्विश्वाधिष्ठानपरमहससद्गुरुरामचन्द्राय नम ॥

# BRAHMAVIDYĀ

## THE ADYAR LIBRARY BULLETIN

Editor: Prof. C. Kunhan Raja, M.A., D.Phil. (Oxon.)

Jt. Editor: A. N. Krishna Aiyangar, M.A., L.T.

*Rates of Subscription:*

Life Subscription Rs. 100

or $ 50

or £ 10

| | (Per Annum) | Single copy |
|---|---|---|
| India & Ceylon | Rs. 6 | Rs. 2-8 |
| U. S. A. | $ 3 | $ 1.25 |
| British Empire | Sh. 12 | Sh. 5 |
| Other Countries | Rs. 9 | Rs. 3-8 |

*All Communications to be addressed to:*

THE DIRECTOR,
Adyar Library,
Adyar, Madras, S. India.